ज्ञापकस्य सजातीयापेक्षत्वादत्र द्विरुक्तादुत्तरखण्डेऽवर्णो लभ्यते, तत्रैव परिभाषा लगति। एवं हि अचिकीर्तदिति रूपं सिद्धम्भवति । अन्यथा तत्रापि परिभाषाप्रवृत्तौ तु पूर्वं कृतशब्दस्य द्वित्वे उक्तरूपासिद्धिः । परिभाषाप्रवृत्तौ तु पूर्वम् 'उपधायाश्च' इति सूत्रेणेत्वे ततो द्वित्वादौ उक्तरूपसिद्धिः सुलभा ।

आख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकमित्यस्यार्थं प्रदर्श्य उदाहरणे योजयत । आख्यायत इत्याख्यानं तद्वाचकात्, तत्–द्वितीयान्तात् कृतः कृत्प्रत्ययान्तात् 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति परिभाषया कंसवधादेरपि कृदन्तत्वम्, आचष्टे इत्यर्थे णिच् स्यात् । कृल्लुक्–कृत्प्रत्ययस्य लुक्, प्रकृतिप्रत्यापत्तिः–तस्यैव कृतः या प्रकृतिः हनादिधातुरूपा, तस्याः प्रत्यापत्तिः—आदेशादिविकारपरित्यागेन स्वरूपेणावस्थानम्भवतीत्यर्थः । कारकञ्च—चात्कार्यम्, हेतुमण्णिचः प्रकृतेर्हन्यादेर्हेतुमण्णौ यादृशं कारकं धातावन्तर्भूतं द्वितीयान्तं यादृशञ्च कार्यं कुत्वतत्वादि तदिहापीत्यर्थः। कंसवधमाचष्टे कंसं घातयतीत्युदाहरणम् । हननं वधः 'हनश्च वधः' इति भावे हन्धातोरप्प्रत्ययः प्रकृतेर्वधादेशश्च । कंसस्य वधः कंसवधः, तमाचष्टे इत्यर्थे णिच् । अप्प्रत्ययस्य कृतो लुक् प्रकृतिभूतस्य हन्धातोर्वधादेशस्य च निवृत्तौ 'कंस हन् इ' इति स्थिते कुत्वतत्वादिकार्ये च उक्तं रूपम् ।

'कंसमजीघतत्' इति रूप साधय । कंसवधमाचष्टे इत्यर्थे कंसवधशब्दात् णिचि तस्मात् लुङि च्लेश्चङि 'आख्यानात् कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्' इति कंसं हन् इति जाते 'चङि' इति द्वित्वे पूर्वस्याभ्याससंज्ञायां 'हलादिः शेषः' इति लोपे 'कुहोश्चुः' इति चुत्वे 'हनस्तोऽचिण्णलोः' इति तकारेऽन्तादेशे 'हो हन्तेः' इति हकारस्य घकारे अटि सन्वद्भावे 'सन्यतः' इतीत्वे 'दीर्घो लघोः' इति दीर्घे 'इतश्च' इतीकारलोपे च रूपम् । ननु कंसवधशब्दाद् णिचि कृते कंसवधशब्दस्याङ्गसंज्ञा धातुसंज्ञा च भवति ततः कंसवधशब्दात्पूर्वमडागमः कंसशब्दस्य द्वित्वञ्च भवितुमर्हति । किञ्च 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानञ्च' इति परिभाषया कुत्वतत्वे न भवतस्तत्र, प्रकृतिवच्चेति चकारो भिन्नक्रमः कारकं चात्कार्यम्, हेतुमण्णिचः प्रकृतेर्हन्यादेर्हेतुमण्णौ यादृशं कारकं धातावन्तर्भूतं द्वितीयान्तं यादृशञ्च कार्यं कुत्वतत्वादि तदिहापीत्यर्थात् । अत्र 'हनश्च वधः' इति अप्प्रत्ययो वधादेशश्चेति दिक् ।

इति रूपलेखनपङ्क्तिलेखनप्रकारः समाप्तः ।